# दत्तात्रेय वज्र कवचम्

ॐ दत्तात्रेय शिरः पातु सहस्राब्जेषु संस्थितः ।
भालं पात्वान् सूयेयः चन्द्र मण्डल मध्यगः ॥ १ ॥

कूर्चं मनोमयः पात् हं क्षं द्विदल पद्मभूः ।
ज्योतीरूपो अक्षिणी पातु पातु शब्दात्मकः श्रुती ॥ २ ॥

नासिकां पातु गंधात्मा मुखं पातु रसात्मकः ।
जिव्हां वेदात्मकः पातु दंतोष्ठौ पातु धार्मिकः ॥ ३ ॥

कपोलावत्रिभूः पातु पा त्वशेषं ममात्मवित् ।
सर्वात्मा षोडशाराब्ज स्थितः स्वात्माऽवताद् गलम् ॥ ४ ॥

स्कंधौ चंद्रानुज पातु भुजौ पातु कृतादिभूः ।
जतृणी शत्रुजित् पातु पातु वक्षःस्थलं हरिः ॥ ५ ॥

कादिठांत द्वादशार पद्मगो मरुदात्मकः ।
योगीश्वरेश्वरः पातु हृदयं हृदयस्थितः ॥ ६ ॥

पार्श्वे हरिः पार्श्ववर्ती पातु पार्श्वस्थितः स्मृतः ।
हठयोगादि योगज्ञः कुक्षीं पातु कृपानिधिः ॥ ७ ॥

डकारादि फकारांत दशार सरसीरुहे ।
नाभिस्थले वर्तमानो नाभिं वह्नि आत्मकोऽवतु ॥ ८ ॥

वह्नि तत्त्वमयो योगी रक्षतान् मणिपूरकम् ।
कटिं कटिस्थ ब्रह्मांड वासुदेवात्मकोऽवतु ॥ ९ ॥

बकारादि लकारांत शट्पत्रांबुज बोधकः ।
जलत्वमयो योगी स्वाधिष्ठानं ममावतु ॥ १० ॥

सिद्धासन समासीन ऊरु सिद्धेश्वरोऽवतु ।
वादिसांत चतुष्पत्र सरोरुह निबोधकः ॥ ११ ॥

मूलाधारं महीरूपो रक्षताद् वीर्यनिग्रही ।
पृष्ठं च सर्वतः पातु जानुन्यस्त करांबुजः ॥ १२ ॥

जंघे पात्ववधूतेंद्रः पात्वंघ्री तीर्थपावनः ।
सर्वांग पातु सर्वात्मा रोमाण्यवतु केशवः ॥ १३ ॥

चर्मं चर्मांबरः पातु रक्तं भक्तिप्रियोऽवतु ।
मांसं मांसकरः पातु मज्जां मज्जात्मकोऽवतु ॥ १४ ॥

अस्थीनि स्थिरधीः पायान्मेधां वेधाः प्रपालयेत् ।
शुक्रं सुखकरः पातु चित्तं पातु दृढाकृतिः ॥ १५ ॥

मनोबुद्धिं अहंकार हृषीकेशात्मकोऽवतु ।
कर्मेन्द्रियाणि पात्वीशः पातु ज्ञानेन्द्रियाण्यजः ॥ १६ ॥

बंधून बंधूत्तमः पायात् शत्रुभ्यः पातु शत्रुजितः ।
गृहाराम धनक्षेत्र पुत्रादीन् शंकरोऽवतु ॥ १७ ॥

भार्यां प्रकृतिवित् पातु पश्वादीन् पातु शारङ्गभृत् ।
प्राणान् पातु प्रदानज्ञो भक्ष्यादीन् पातु भास्करः ॥ १८ ॥

सुखं चंद्रात्मकः पातु दुःखात् पातु पुरांतकः ।
पशून् पशुपतिः पातु भूतिं भूतेश्वरो मम ॥ १९ ॥

प्राच्यां विषहरः पातु पात्वाग्नेय्यां मखात्मकः ।
याम्यां धर्मात्मकः पातु नैऋत्यां सर्ववैरिहृत् ॥ २० ॥

वराहः पातु वारुण्यां वायव्यां प्राणदोऽवतु ।
कौबेर्यां धनदः पातु पात्वैशान्यां महागुरुः ॥ २१ ॥

ऊर्ध्वं पातु महासिद्धः पात्वधस्ताः जटाधरः ।
रक्षाहीनं तु यत् स्थानं रक्षत्वादि मुनीश्वरः ॥ २२ ॥

एतन्मे वज्रकवचं यः पठेत् श्रुणुयादपि ।
वज्रकायः चिरंजीवी दत्तात्रेयो अहमब्रुवम् ॥ २३ ॥

त्यागी भोगी महायोगी सुखदुःख विवर्जितः ।
सर्वत्र सिद्धसंकल्पो जीवन्मुक्तोऽद्य वर्तते ॥ २४ ॥

इत्युक्त्वा अंतर्दधे योगी दत्तात्रेयो दिगंबरः ।
दलादनोऽपि तत् जप्त्वा जीवन्मुक्तः स वर्तते ॥ २५ ॥

भिल्लो दूरश्रवा नामं तदानीं शृतवानिदम् ।
सकृत् श्रवण मात्रेण वज्रांगोऽभवदप्यसौ ॥ २६ ॥

इत्येतद् वज्रकवचं दत्तात्रेयस्य योगिनः ।
शृत्वा शेषं शंभु मुखात् पुनरप्याह पार्वती ॥ २७ ॥

॥ इति श्री दत्तात्रेय वज्र कवचं संपूर्णम् ॥